क्षोभ–पुं० क्षुभ-घञ्। "क्ष: खः क्वचित्तु छझौ" ८।२।३। इति सूत्रे क्वचिदितिनिर्देशादत्र छ'। यथा–'छोहो' प्रा०। "समघथधभाम्" ।।८।१।१८७। इति अनादिभूतस्य भस्य ह' प्रा०। यथा-'सहाओ'इति। सञ्चलने, "सनूपुरक्षोभपदाभिरासीत्।" "रथक्षोभपरिश्रान्तः।" विकारे," क्षोभमाशु हृदय न यदूनाम।" क्षुभ -एवुल्। क्षोभकारके, त्रि०। क्षुभ-णिच् ल्युट्। क्षोभजनके, त्रि० । कामबाणविशेषे, पुं०। विष्णौ, पुं०। भावे-ल्युट्। क्षोभे, वाच०। संभ्रमे, स्तेनकेभ्य' क्षोभे,राजाऽऽदिक्षोभे, वा,तत्रास्थानेऽपि उच्चारयतो न कायोत्सर्गभङ्ग। आव०५ अ०। "जानो छोहो, न नज्जइ- केन हुरिय त्ति ।। आ० म० १ अ० १ खण्ड। निःसहाये, क्षोभणीये च। प्रश्न० ३ आश्र० द्वार। अभ्याख्याने, वृ० १ उ० । ज० । रा० ।

—०#०—

"दृप्तभ्रान्तविपक्षदन्तिदमने पञ्चाननग्रामणी–
राजेन्द्राभिधकोशसंप्रणयनात् संदीप्तजैनश्रुतः ।
संघस्योपकृतिप्रयोगकरणे नित्यं कृती तादृशः,
कोऽन्यः सूरिपदाङ्कितो विजयराजेन्द्रात्परः पुण्यवान् ॥१॥"





इति श्रीसौधर्मबृहत्तपागच्छीय—कलिकालसर्वज्ञकल्प–भट्टारक–
जैनश्वेताम्बराऽऽचार्यश्री १००८ श्रीमद् विजयराजेन्द्रसूरीश्वर-
विरचिते "अभिधानराजेन्द्रे" छकाराऽऽदिशब्द-
सङ्कलनं समाप्तम् ।
तत्समाप्तौ च समाप्तोऽयं तृतीयो भागः ।







इति

श्रीमत्सौधर्मबृहत्तपागच्छीय–कलिकालसर्वज्ञकल्प–सर्वतन्त्रस्वतन्त्र

जैनश्वेताम्बराचार्य श्री श्री १००८ श्री भट्टारक–

श्रीमद्विजयराजेन्द्रसूरीश्वरमहाराजविरचिते

" शब्दसङ्कलनात्मके " श्री अभिधानराजेन्द्रकोषे



तृतीयो भागः समाप्तः

